कनकचंद्रस्य, राज्यं कर्कोटसंभवं । राज्यं तत्तारचंद्रस्य, श्रीनंदिपुरसंभवं ॥ ३५ ॥ एवं सर्वान् निजान् पुत्रान्, कं कुत्र कं च कुत्रचित् । राज्ये प्रस्थाप्य संत्यज्य, नवधापि परिग्रहं ॥ ३६ ॥ श्रीचंद्रराजराजेंद्रः, समं चंद्रकलादिभिः । राज्ञीभिश्च समस्ताभि-र्गुणचंद्रादिभिस्तथा ॥ ३७ ॥ सहस्रैरष्टभिः पौरै-र्मंत्रिभिः श्रेष्ठिभिर्नरैः । चतुःसहस्रसंख्याभिः, पौरनारीभिरन्वितः ॥ ३८ ॥ श्रीधर्मघोषसूरींद्र-पार्श्वे जग्राह सद्व्रतं । ततो विजह्रे गुरुभिः, सार्धं तैर्मुनिभिस्तदा ॥ ३९ ॥ अष्टभिः कुलकं ॥ अधीतद्वादशांगीक-स्तपस्तप्त्वातिदारुणं । भुक्त्वा छद्मस्थपर्याय-मष्टौ वर्षाणि शुद्धधीः ॥४०॥ घनघातीनि कर्माणि, क्षिप्त्वा चत्वार्यपि क्षणात् । प्राप श्रीचंद्रराजर्षिः, केवलज्ञानमुत्तमं (मद्भुतं) ॥ ४१ ॥ चक्रे सुरासुरैस्तत्र, भूमींद्रैश्च महान् महः । सुवर्णकमलस्वर्ण-सिंहासनादिकस्ततः ॥ ४२ ॥ श्रीचंद्रः केवली सर्व-देशेषु विहरन् सदा । दशपद्सहस्रसाधून्, साध्वीस्तदर्धमानतः ॥४३॥ अभितो दीक्षयामास, धर्मोपदेशशक्तितः । सम्यक्त्वादिक्रियादानैः, श्राद्धीचक्रे बहून् जनान् ॥४४॥ युग्मं ॥ गुणचंद्रादिसाधूनां, बहूनां कर्मसंक्षयात् । तथा चंद्रकलाद्यानां, साध्वीनां च तदाजनि ॥ ४५ ॥ परमं केवलज्ञानं, तथा च कमलश्रियाः । शीलात्सा मोहनी स्वर्गे, प्रागान्मोक्षेऽपि यास्यति ॥ ४६ ॥ युग्मं ॥ एवं केवलिपर्यायं, पंचत्रिंशत्समाः समाः । श्रीचंद्रः पालयामास, भव्यांस्तान् प्रतिबोधयन् ॥ ४७ ॥ प्रपाल्यायुर्वर्षशतं, पंचपंचाशदुत्तरं । श्रीचंद्रकेवली प्राप, निर्वाणपदमव्ययं ॥ ४८ ॥ उक्तं च—

साहिय वाससयं जो, तिखंडनिवसयलभइयपयकमलो । एगच्छत्तं रज्जं, पालइ इंदु व सिरिचंदो ॥ ४९ ॥ कम्मट्ठगंठिअट्टं (धरं), अट्ठहिं वरिसेहिं जोगसत्थेण । संखवियं जेण मुणी सो, सिरिचंदो केवली जयउ ॥ ५० ॥ भवियकमलाण

वयणु-करेइं जो दिणयरु व बोहिंतो । विहरइ केवलिणं तं, वंदे सिरिचंदरायरिसिं ॥ ५१ ॥ निवाणधम्मतित्थे, पणपन्नसया-उअं च पालित्ता । सिद्धि पत्तो जो तं, मंहं सिरिचंदं णमह निचं ॥ ५२ ॥ निर्ग्रंथा ये तथा साध्व्यः, श्रीचंद्रज्ञानिदीक्षिताः । तन्मध्ये केवलज्ञान-मासाद्यैके शिवं ययुः ॥ ५३ ॥ केचित्सर्वार्थसिद्धिं च, प्रापुः शेषा दिवं च ये । एकावतारिणो भूत्वा, सिद्धौ यास्यंति तेऽखिलाः ॥ ५४ ॥

इत्याचाम्लवर्धमान-तपोमहिम्न्यसौ कथा । श्रेणिकाग्रे पुरा यादृक्, श्रीवीरस्वामिनोदिता ॥५५॥ तादृशी चेटकक्ष्माप!, त्वदग्रे बोधिहेतवे । श्रीचंद्रकेवलज्ञानि-कथेयं कथिता मया ॥ ५६ ॥ किंच-चतुर्विंशतिका अष्ट-शतं यावदिदं तपः । कर्ता श्रीचंद्रभूपोऽयं, ज्ञानिभिर्वर्णयिष्यते ॥ ५७ ॥ ततः श्रीचेटको राजा, श्रीगौतममुखात्तदा । श्रीचंद्रचरितं श्रुत्वा, तपःकर्मोद्यतोऽभवत् ॥ ५८ ॥ वस्वंकेषुमिते वर्षे ( ५९८ ), श्रीसिद्धर्षिरिदं महत् । प्राक्प्राकृतचरित्राद्धि, चरित्रं संस्कृतं व्यधात् ॥ ५९ ॥ तस्मान्नानार्थसंदोहा-दुद्धृतेयं कथात्र च । न्यूनाधिकान्यथायु(यु)क्ते-र्मिथ्या दुःकृतमस्तु मे ॥ ६० ॥ एला यत्र दया क्षमा च लवुली सत्यं लवंगं परं, कारुण्यं क्रमुकीफलानि विदितश्चूर्णः स तत्त्वोदयः । कर्पूरं मुनिदानमुत्तमगुणं शीलं सुपत्रोच्चयो, गृह्णीध्वं गुणकृज्जिनेंद्रगदितं तांबूलमेतद्वरं(जनाः) ॥ ६१ ॥ संघोऽयं गुणरत्नरोहणगिरिः संघः सतां मंडनं, संघोऽयं प्रबलप्रतापतरणिः संघो महामंगलं । संघोऽभीप्सितदानकल्पविटपी संघो गुरुभ्यो गुरुः, संघः सर्वजिनाधिनाथमहितः संघश्चिरं नंदतात् ॥ ६२ ॥

---

१ ' सिरिचंदं णमह णंतणहं ' इति प्रतौ पाठः ॥ २ ' चतुर्विंशत्यष्टशतं, शुद्धं याव० ' इति प्रतौ पाठः ॥

इति श्रीश्रीचंद्रचरित्रे श्रीश्रीचंद्रनृपप्राग्भवत्रिखंडराजाधिराजत्वतीर्थयात्रादिधर्म-
कृत्यदीक्षाकेवलज्ञाननिर्वाणवर्णनो नाम चतुर्थोऽधिकारः समाप्तः ॥ श्रीरस्तु ॥

## ॥ इति श्रीश्रीचंद्रचरित्रं समाप्तं ॥